# चम्पूरामायणे

# बालकाण्डम्

४१ – १२.११.२०१८

vyoma

॥ वाचं धेनुमुपासीत ॥

Saṃskṛtam · Value Education · Technology



# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

Vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam · Value Education · Technology

# पुनरावर्तनम्

- रामेण हरकोदण्डभङ्गः
- धनुर्भङ्गात् जनितस्य नादस्य वर्णनम्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

# तत्र दशरथः सीतापरिणयकृतनिश्चयजनकप्रहितदूताहूतः पुरोहिताभ्युपगमान्मिथिलामुपागमत्।

- तत्र, दशरथः, सीता-परिणय-कृत-निश्चय-जनक-प्रहित-दूत-आहूतः पुरोहित-अभ्युपगमात्, मिथिलाम्, उपागमत्
- तत्र = तस्मिन् समये
- दशरथः = अयोध्याधिपतिः
- सीतापरिणयकृतनिश्चयजनकप्रहितदूताहूतः = रामेण सह सीतायाः विवाहस्य निश्चयं कृत्वा जनकेन प्रेषितैः दूतैः आहूतः सन्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# तत्र दशरथः सीतापरिणयकृतनिश्चयजनकप्रहितदूताहूतः पुरोहिताभ्युपगमान्मिथिलामुपागमत्।

- पुरोहिताभ्युपगमात् = कुलगुरोः वसिष्ठस्य अनुमत्या
- मिथिलाम् = जनकराजधानीम्
- उपागमत् = प्राप्तवान्
- तात्पर्य्यम् – जनकः सीतारामयोः विवाहं कर्तुं निश्चित्य दशरथम् आह्वातुं दूतान् प्रेषयामास । दशरथः कुलगुरोः वसिष्ठस्य अनुज्ञया मिथिलां प्राप्तः।

यत्कीर्तिस्तिलकायते सुरवधूसङ्गीतगोष्ठीमुखे
येनाद्यः पितृमान्पुमान्वसुमती येनैव राजन्वती।
इन्द्रः सङ्गरसङ्कटेषु विजहौ वीरस्य यस्योन्मुख-
प्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनाद्दुर्दशाम्॥१०६॥

- यत्-कीर्तिः, तिलकायते, सुर-वधू-सङ्गीत-गोष्ठी-मुखे, येन, आद्यः, पितृमान्, पुमान्, वसुमती, येन, एव, राजन्वती इन्द्रः, सङ्गर-सङ्कटेषु, विजहौ, वीरस्य, यस्य, उन्मुख-प्रेङ्खत्-स्यन्दन-केतन-अम्बर-दशा-सन्दर्शनात्, दुर्-दशाम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

यत्कीर्तिस्तिलकायते सुरवधूसङ्गीतगोष्ठीमुखे येनाद्यः पितृमान्पुमान्वसुमती येनैव राजन्वती।
इन्द्रः सङ्गरसङ्कटेषु विजहौ वीरस्य यस्योन्मुखप्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनाद्दुर्दशाम्॥१०६॥

- तिलकायते = अलङ्कारभूतमस्ति
- का तिलकायते? यत्कीर्तिः = दशरथस्य यशः
- कुत्र तिलकायते? सुरवधूसङ्गीतगोष्ठीमुखे = अप्सरस्त्रीणां गानसभासु प्रारम्भे एव
- येन [अस्ति] = दशरथेन
- कः अस्ति? आद्यः पुमान् = आदिपुरुषः नारायणः
- कथम्भूतः अस्ति? पितृमान् = जनकवान्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

यत्कीर्तिस्तिलकायते सुरवधूसङ्गीतगोष्ठीमुखे येनाद्यः पितृमान्पुमान्वसुमती येनैव राजन्वती।
इन्द्रः सङ्गरसङ्कटेषु विजहौ वीरस्य यस्योन्मुखप्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनाद्दुर्दशाम्॥१०६॥

- येन एव [अस्ति] = दशरथेन एव
- का अस्ति? वसुमती = भूमिः
- कथम्भूता अस्ति? राजन्वती = सुराजयुक्ता
- विजहौ = त्यक्तवान्
- कः विजहौ? इन्द्रः = देवराजः

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

यत्कीर्तिस्तिलकायते सुरवधूसङ्गीतगोष्ठीमुखे येनाद्यः पितृमान्पुमान्वसुमती येनैव राजन्वती।
इन्द्रः सङ्गरसङ्कटेषु विजहौ वीरस्य यस्योन्मुखप्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनाद्दुर्दशाम्॥१०६॥

- कां विजहौ? दुर्दशाम् = दुरवस्थाम्
- कस्मिन् सन्दर्भे विजहौ? सङ्गरसङ्कटेषु = युद्धस्य कष्टकाले
- कस्मात् कारणात् विजहौ? उन्मुखप्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनात् - उन्मुखम् = अभिमुखम्, प्रेङ्खन्त्यः = वायुना चलन्त्यः, स्यन्दनस्य = रथस्य, केतनानाम् = ध्वजानाम्, अम्बरदशाः = वस्त्राञ्चलानि, तेषां सन्दर्शनात् = वीक्षणात्
- कस्य उन्मुखप्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनात्? यस्य वीरस्य = पराक्रमिणः दशरथस्य

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

यत्कीर्तिस्तिलकायते सुरवधूसङ्गीतगोष्ठीमुखे येनाद्यः पितृमान्पुमान्वसुमती येनैव राजन्वती।
इन्द्रः सङ्गरसङ्कटेषु विजहौ वीरस्य यस्योन्मुखप्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनाद्दुर्दशाम्॥१०६॥

- अन्वयः – यत्कीर्तिः सुरवधूसङ्गीतगोष्ठीमुखे तिलकायते, येन आद्यः पुमान् पितृमान्, येनैव वसुमती राजन्वती, यस्य वीरस्य उन्मुखप्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनात् इन्द्रः सङ्गरसङ्कटेषु दुर्दशां विजहौ [सः दशरथः मिथिलामुपागमत्]

यत्कीर्तिस्तिलकायते सुरवधूसङ्गीतगोष्ठीमुखे येनाद्यः पितृमान्पुमान्वसुमती येनैव राजन्वती।
इन्द्रः सङ्गरसङ्कटेषु विजहौ वीरस्य यस्योन्मुखप्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनाद्दुर्दशाम्॥१०६॥

- तात्पर्य्यम् – स्वर्गे अप्सरस्त्रीणां गानसभासु दशरथस्य यशोगीतानि एव आदौ गीयन्ते । आदिपुरुषस्य नारायणस्यापि पितृभूतः अयम् । सत्स्वपि बहुषु राजसु, दशरथस्य कारणेनैव भूमिः “राजन्वती” (सुराजयुक्ता) इति कथ्यते । देवासुरसमरेषु कष्टदशायां स्थितः इन्द्रः साहाय्यार्थमागच्छतः पराक्रमिणः दशरथस्य रथध्वजानां दर्शनेन सन्तुष्टो भवति ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

यत्कीर्तिस्तिलकायते सुरवधूसङ्गीतगोष्ठीमुखे येनाद्यः पितृमान्पुमान्वसुमती येनैव राजन्वती।
इन्द्रः सङ्गरसङ्कटेषु विजहौ वीरस्य यस्योन्मुखप्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनाद्दुर्दशाम्॥१०६॥

- तिलकायते – तिलकः इव आचरति । तिलक+क्यङ् – नामधातुः । लट्, प्रथम.१
- सुरवधूसङ्गीतगोष्ठीमुखे – सुराणां वध्वः, सङ्गीतस्य गोष्ठ्यः, सुरवधूनां सङ्गीतगोष्ठ्यः, सुरवधूसङ्गीतगोष्ठीनां मुखम्, तस्मिन्
- पितृमान् – पिता अस्य अस्ति – पितृ+मतुप् (तद्धितः) – तकारान्तः, पुं, १.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

यत्कीर्तिस्तिलकायते सुरवधूसङ्गीतगोष्ठीमुखे येनाद्यः पितृमान्पुमान्वसुमती येनैव राजन्वती।
इन्द्रः सङ्गरसङ्कटेषु विजहौ वीरस्य यस्योन्मुखप्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनाद्दुर्दशाम्॥१०६॥

- पुमान् – सकारान्तः, पुं, "पुंस्", १.१
- वसुमती – "सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा" (अमरः)
- राजन्वती – राजा अस्याः अस्ति । "सुराज्ञि देशे राजन्वान् स्यात् ततोऽन्यत्र राजवान्" (अमरः) । "राजन्वान् सौराज्ये" (८.२.१४)
- सङ्गरसङ्कटेषु – सङ्गरस्य सङ्कटाः, तेषु।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education · Technology

यत्कीर्तिस्तिलकायते सुरवधूसङ्गीतगोष्ठीमुखे येनाद्यः पितृमान्पुमान्वसुमती येनैव राजन्वती।
इन्द्रः सङ्गरसङ्कटेषु विजहौ वीरस्य यस्योन्मुखप्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनाद्दुर्दशाम्॥१०६॥

- विजहौ – वि+“ओहाक् त्यागे” – लिट्, प्रथम.१
- लुप्तोपमा, रूपकम्
- शार्दूलविक्रीडितम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# जनकः स्वकनीयांसमाजुहाव कुशध्वजम्।
# हत्वा युधि सुधन्वानं साङ्काश्ये स्थापितं पुरे॥१०७॥

- जनकः, स्व-कनीयांसम्, आजुहाव, कुशध्वजम्, हत्वा, युधि, सुधन्वानम्, साङ्काश्ये, स्थापितम्, पुरे
- आजुहाव = आकारितवान्, आहूतवान्
- कः आजुहाव? जनकः = सीतायाः पिता
- कम् आजुहाव? कुशध्वजम् = कुशध्वजनामकम्
- कीदृशं कुशध्वजम्? स्वकनीयांसम् = अनुजम्

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

# जनकः स्वकनीयांसमाजुहाव कुशध्वजम्।
# हत्वा युधि सुधन्वानं साङ्काश्ये स्थापितं पुरे॥१०७॥

- पुनः कीदृशं कुशध्वजम्? स्थापितम् = प्रतिष्ठापितम्
- कुत्र स्थापितम्? साङ्काश्ये पुरे = साङ्काश्यनगरे
- किं कृत्वा स्थापितम्? हत्वा = मारयित्वा
- कं हत्वा? सुधन्वानम् = सुधन्वनामकं राजानम्
- कुत्र हत्वा? युधि = युद्धे

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# जनकः स्वकनीयांसमाजुहाव कुशध्वजम्।
# हत्वा युधि सुधन्वानं साङ्काश्ये स्थापितं पुरे॥१०७॥

- अन्वयः – जनकः सुधन्वानं युधि हत्वा साङ्काश्ये पुरे स्थापितं स्वकनीयांसं कुशध्वजम् आजुहाव
- तात्पर्य्यम् – सुधन्वनामकं राजानं युद्धे मारयित्वा साङ्काश्यनगरे प्रतिष्ठापितं स्वस्य अनुजं कुशध्वजं जनकः मिथिलां प्रति आकारितवान्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# जनकः स्वकनीयांसमाजुहाव कुशध्वजम्।
# हत्वा युधि सुधन्वानं साङ्काश्ये स्थापितं पुरे॥१०७॥

- स्वकनीयांसम् – स्वस्य कनीयान्, तम् । सकारान्तः, पुं, २.१ । “द्विवचनविभज्योपपदे तरबीयसुनौ” ५.३.५७
- आजुहाव – आ+ “ह्वेञ् स्पर्धायां शब्दे च” – लिट्, प्रथम.१
- युधि – धकारान्तः, स्त्री, ७.१
- अनुष्टुप् छन्दः

# तदनु ताभ्यामभ्यर्चितः सपुरोहितो दशरथस्तत्र पुत्राणां गोदानमङ्गलं निर्वर्तयामास।

- तत्-अनु, ताभ्याम्, अभ्यर्चितः, स-पुरोहितः, दशरथः, तत्र, पुत्राणाम्, गो-दान-मङ्गलम्, निर्वर्तयामास
- तदनु = ततः
- ताभ्याम् = जनक-कुशध्वजाभ्याम्
- अभ्यर्चितः = सत्कृतः
- सपुरोहितः = वसिष्ठसहितः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam-Value Education-Technology

# तदनु ताभ्यामभ्यर्चितः सपुरोहितो दशरथस्तत्र पुत्राणां गोदानमङ्गलं निर्वर्तयामास।

- दशरथः
- तत्र = मिथिलायाम्
- पुत्राणाम् = राम-लक्ष्मण-भरत-शत्रुघ्नानाम्
- गोदानमङ्गलम् = गोदानरूपं विवाहदीक्षाङ्गं कर्म । "गावः = लोमानि, दीयन्ते = खण्ड्यन्ते" – विवाहात्पूर्वं केशकर्तनसंस्कारः ।
- निर्वर्तयामास = विहितवान्

Vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# तदनु ताभ्यामभ्यर्चितः सपुरोहितो दशरथस्तत्र पुत्राणां गोदानमङ्गलं निर्वर्तयामास।

- तात्पर्य्यम् – जनक-कुशध्वजाभ्यां सत्कृतः वसिष्ठसहितः दशरथः विवाह-दीक्षाङ्गतया पुत्राणां केशकर्तन-संस्कारं विहितवान्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# जग्राह जनकात्सीतां तातादेशेन राघवः।
# आम्नायशासनेनार्चां यजमानादिवानलः॥१०८॥

- जग्राह, जनकात्, सीताम्, तात-आदेशेन, राघवः, आम्नाय-शासनेन, अर्चाम्, यजमानात्, इव, अनलः
- जग्राह = स्वीकृतवान्
- कः जग्राह? राघवः = श्रीरामः
- कां जग्राह? सीताम् = जानकीम्
- कस्मात् जग्राह? जनकात्

# जग्राह जनकात्सीतां तातादेशेन राघवः।
# आम्नायशासनेनार्चां यजमानादिवानलः॥१०८॥

- केन जग्राह? तातादेशेन = पितुः दशरथस्य आज्ञया
- कः इव जग्राह? अनलः इव = अग्निः इव
- काम् इव जग्राह? अर्चाम् = सत्क्रियाम्
- कस्मात् इव जग्राह? यजमानात् = यजनकर्तुः गृहस्थात्
- केन इव जग्राह? आम्नायशासनेन = श्रुतिवचनेन

# जग्राह जनकात्सीतां तातादेशेन राघवः।
# आम्नायशासनेनार्चां यजमानादिवानलः॥१०८॥

- अन्वयः – अनलः आम्नायशासनेन यजमानात् अर्चाम् इव राघवः तातादेशेन जनकात् सीतां जग्राह ।
- तात्पर्य्यम् – यथा अग्निः श्रुतिवचनेन अनुमतः यजनकर्तुः गृहस्थात् होमादिसत्क्रियां स्वीकरोति, तथा श्रीरामः पितुः दशरथस्य अनुज्ञया जनकमहाराजात् सीतां स्वीचकार । (परिणीतवान् इत्यर्थः)

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

# जग्राह जनकात्सीतां तातादेशेन राघवः।
# आम्नायशासनेनार्चां यजमानादिवानलः॥१०८॥

- जग्राह – "ग्रह उपादाने" – लिट्, प्रथम.१
- तातादेशेन – तातस्य आदेशः, तेन । "तातस्तु जनकः पिता" (अमरः)
- आम्नायशासनेन – आम्नायस्य शासनम्, तेन । "श्रुतिः स्त्री वेद आम्नायः" (अमरः)
- अनलः – "कृशानुः पावकोऽनलः" (अमरः)
- अनुष्टुप् छन्दः, उपमालङ्कारः

आश्चर्यमेतत्।

गुणमनिमिषचापे कश्चिदारोप्य सीतां
कुशिकतनयवाक्यादग्रहीद्रामभद्रः।
तदनु तदनुजन्मा मैथिलेन्द्रस्य चित्ते
निहितबहुगुणः सन्नूर्मिलां लक्ष्मणोऽपि॥१०९॥

- गुणम्, अनिमिष-चापे, कश्चित्, आरोप्य, सीताम्, कुशिक-तनय-वाक्यात्, अग्रहीत्, रामभद्रः, तत्-अनु, तत्-अनु-जन्मा, मैथिल-इन्द्रस्य, चित्ते, निहित-बहु-गुणः, सन्, ऊर्मिलाम्, लक्ष्मणः, अपि

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

गुणमनिमिषचापे कञ्चिदारोप्य सीतां कुशिकतनयवाक्यादग्रहीद्रामभद्रः।
तदनु तदनुजन्मा मैथिलेन्द्रस्य चित्ते निहितबहुगुणः सन्नूर्मिलां लक्ष्मणोऽपि॥१०९॥

- अग्रहीत् = स्वीकृतवान्
- कः अग्रहीत्? रामभद्रः = सकलकल्याणस्वरूपः, विवाहकर्मदीक्षितः श्रीरामः
- काम् अग्रहीत्? सीताम् = जानकीम्
- किं कृत्वा अग्रहीत्? आरोप्य = निक्षिप्य
- कम् आरोप्य? कञ्चित् गुणम् = एकां मौर्वीम्

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

गुणमनिमिषचापे कञ्चिदारोप्य सीतां कुशिकतनयवाक्यादग्रहीद्रामभद्रः।
तदनु तदनुजन्मा मैथिलेन्द्रस्य चित्ते निहितबहुगुणः सन्नूर्मिलां लक्ष्मणोऽपि॥१०९॥

- कस्मिन् आरोप्य? अनिमिषचापे = दिव्यधनुषि
- कस्मात् कारणात् आरोप्य? कुशिकतनयवाक्यात् = विश्वामित्रस्य आज्ञया
- तदनु = ततः
- [अग्रहीत्]
- कः अपि अग्रहीत्? लक्ष्मणः अपि

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

गुणमनिमिषचापे कश्चिदारोप्य सीतां कुशिकतनयवाक्यादग्रहीद्रामभद्रः।
तदनु तदनुजन्मा मैथिलेन्द्रस्य चित्ते निहितबहुगुणः सन्नूर्मिलां लक्ष्मणोऽपि॥१०९॥

- कीदृशः लक्ष्मणः? तदनुजन्मा = श्रीरामस्य अनुजः
- काम् अग्रहीत्? ऊर्मिलाम् = जनकस्य पुत्रीम्
- कथम्भूतः सन् अग्रहीत्? निहितबहुगुणः सन् = निक्षिप्त-नानाविध-सद्गुणः
- कस्मिन् निहितबहुगुणः सन्? चित्ते = हृदये
- कस्य चित्ते? मैथिलेन्द्रस्य = जनकस्य

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

गुणमनिमिषचापे कञ्चिदारोप्य सीतां कुशिकतनयवाक्यादग्रहीद्रामभद्रः।
तदनु तदनुजन्मा मैथिलेन्द्रस्य चित्ते निहितबहुगुणः सन्नूर्मिलां लक्ष्मणोऽपि॥१०९॥

- अन्वयः – कुशिकतनयवाक्यात् अनिमिषचापे कञ्चित् गुणम् आरोप्य रामभद्रः सीताम् अग्रहीत् । तदनु तदनुजन्मा लक्ष्मणः अपि मैथिलेन्द्रस्य चित्ते निहितबहुगुणः सन् ऊर्मिलाम् (अग्रहीत्)
- तात्पर्य्यम् – श्रीरामः विश्वामित्रस्य वचनात् मूर्ते दिव्यधनुषि एकां मौर्वीं निक्षिप्य सीतां परिणीतवान् । ततः तस्य अनुजः लक्ष्मणः तु अमूर्ते जनकस्य हृदये बहून् गुणान् (विद्याविनयादीन्) निक्षिप्य तस्य अपरां सुताम् ऊर्मिलां परिणीतवान् ।

गुणमनिमिषचापे कश्चिदारोप्य सीतां कुशिकतनयवाक्यादग्रहीद्रामभद्रः।
तदनु तदनुजन्मा मैथिलेन्द्रस्य चित्ते निहितबहुगुणः सन्नूर्मिलां लक्ष्मणोऽपि॥१०९॥

- गुणः – "मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसन्ध्यादिके गुणः" (अमरः)
- अनिमिषचापे – अनिमिषाणां चापः, तस्मिन् । "सुरमत्स्यावनिमिषौ" (अमरः)
- अग्रहीत् – "ग्रह उपादाने" – लुङ्, प्रथम.१
- अनुजन्मा – अनु=पश्चात् जन्म यस्य सः । नकारान्तः पुं १.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

गुणमनिमिषचापे कञ्चिदारोप्य सीतां कुशिकतनयवाक्यादग्रहीद्रामभद्रः।
तदनु तदनुजन्मा मैथिलेन्द्रस्य चित्ते निहितबहुगुणः सन्नूर्मिलां लक्ष्मणोऽपि॥१०९॥

- मैथिलेन्द्रस्य – मैथिलानाम् इन्द्रः, तस्य
- निहितबहुगुणः – निहिताः बहवो गुणाः येन सः
- सन् + ऊर्मिलाम् – ङमुडागमसन्धिः
- श्लेषः, व्यतिरेकः – “व्यतिरेको विशेषश्चेदुपमानोपमेययोः”
- मालिनीवृत्तम् – “ननमयययुतेयं मालिनी भोगिलोकैः” – ८+७ = १५

# ततो भरतशत्रुघ्नौ कुशध्वजनियोगतः।
# माण्डवीश्रुतकीर्तिभ्यामभूतां गृहमेधिनौ॥११०॥

- ततः, भरत-शत्रुघ्नौ, कुशध्वज-नियोगतः, माण्डवी-श्रुतकीर्तिभ्याम्, अभूताम्, गृह-मेधिनौ
- ततः = रामलक्ष्मणयोः विवाहानन्तरम्
- अभूताम् = आस्ताम्
- कौ अभूताम्? भरतशत्रुघ्नौ

ततो भरतशत्रुघ्नौ कुशध्वजनियोगतः।
माण्डवीश्रुतकीर्तिभ्यामभूतां गृहमेधिनौ॥११०॥

- कीदृशौ अभूताम्? गृहमेधिनौ = गृहस्थौ
- काभ्याम् अभूताम्? माण्डवी-श्रुतकीर्तिभ्याम्
- कस्मात् कारणात् अभूताम्? कुशध्वजनियोगतः = जनकानुजस्य कुशध्वजस्य आज्ञया

# ततो भरतशत्रुघ्नौ कुशध्वजनियोगतः।
# माण्डवीश्रुतकीर्तिभ्यामभूतां गृहमेधिनौ॥११०॥

- अन्वयः – ततः भरतशत्रुघ्नौ कुशध्वजनियोगतः माण्डवीश्रुतकीर्तिभ्यां गृहमेधिनौ अभूताम्
- तात्पर्य्यम् – तदनन्तरं भरतशत्रुघ्नौ जनकानुजस्य कुशध्वजस्य आज्ञया तत्पुत्र्यौ माण्डवी-श्रुतकीर्त्याख्ये कन्यके परिणीय गृहस्थौ अभूताम् ।
- अनुष्टुप् छन्दः

# सङ्क्षेपः

- दशरथस्य वर्णनम्
- कुशध्वजस्य आगमनम्
- राम-लक्ष्मण-भरत-शत्रुघ्नानां विवाहः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in